॥ बह्वृचोपनिषत् ॥

॥ अथ बह्वृचोपनिषत्॥

ॐ वाङ्मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितम् ।
आविरावीर्म एधि । वेदस्य म आणीस्थः । श्रुतं मे मा प्रहासीः ।
अनेनाधीतेनाहोरात्रान्सन्दधामि । ऋतं वदिष्यामि ।
सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् ।
अवतु वक्तारम् । अवतु वक्तारम् ।
ॐ शान्तिः शान्तिः शान्तिः ॥

बह्वृचाख्यब्रह्मविद्यामहाखण्डार्थवैभवम् ।
अखण्डानन्दसाम्राज्यं रामचन्द्रपदं भजे ॥

हरिः ॐ ॥

देवी ह्येकाग्र एवासीत् । सैव जगदण्डमसृजत् ।
कामकलेति विज्ञायते । शृंगारकलेति विज्ञायते ॥ १॥

तस्या एव ब्रह्मा अजीजनत् । विष्णुरजीजनत् ।
रुद्रोऽजीजनत् । सर्वे मरुद्गणा अजीजनत् ।
गन्धर्वाप्सरसः किन्नरा वादित्रवादिनः समन्तादजीजनत् ।
भोग्यमजीजनत्। सर्वमजीजनत् । सर्वं शाक्तमजीजनत् ।
अण्डजं स्वेदजमुद्भिज्जं जरायुजम् यत्किंचैतत् प्राणि
स्थावरजंगमं मनुष्यमजीजनत् ॥ २॥

सैषा परा शक्तिः । सैषा शांभवीविद्या
कादिविद्येति वा हादिविद्येति वा सादिविद्येति वा ।
रहस्यमोमों वाचि प्रतिष्ठा ॥ ३॥

सैव पुरत्रयं शरीरत्रयं व्याप्य बहिरन्तरवभासयन्ती
देशकालवस्त्वन्तरसंगान्महात्रिपुरसुन्दरी वै प्रत्यक्चितिः ॥

४॥

सैवात्मा ततोऽन्यमसत्यमनात्मा । अत एषा
ब्रह्मासंवित्तिर्भावभावकलाविनिर्मुक्ता
चिद्विद्याऽद्वितीयब्रह्मसंवित्तिः सच्चिदानन्दलहरी

महात्रिपुरसुन्दरी बहिरन्तरनुप्रविश्य स्वयमेकैव विभाति ।
यदस्ति सन्मात्रम् । यद्विभाति चिन्मात्रम् ।
यत्प्रियमानन्दं तदेतत् पूर्वाकारा महात्रिपुरसुन्दरी ।
त्वं चाहं च सर्वं विश्वं सर्वदेवता इतरत्
सर्वं महात्रिपुरसुन्दरी । सत्यमेकं ललिताख्यं वस्तु
तदद्वितीयमखण्डार्थं परं ब्रह्म ॥ ५॥

पञ्चरूपपरित्यागा दर्वरूपप्रहाणतः ।
अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत् ॥ इति ॥ ६॥

प्रज्ञानं ब्रह्मेति वा अहं ब्रह्मास्मीति वा भाष्यते ।
तत्त्वमसीत्येव संभाष्यते ।
अयमात्मा ब्रह्मेति वा ब्रह्मैवाहमस्मीति वा ॥ ७॥

योऽहमस्मीति वा सोहमस्मीति वा योऽसौ सोऽहमस्मीति वा
या भाव्यते सैषा षोडशी श्रीविद्या पञ्चदशाक्षरी
श्रीमहात्रिपुरसुन्दरी बालांबिकेति बगलेति वा मातंगीति
स्वयंवरकल्याणीति भुवनेश्वरीति चामुण्डेति चण्डेति
वाराहीति तिरस्करिणीति राजमातंगीति वा शुकश्यामलेति वा
लघुश्यामलेति वा अश्वारूढेति वा प्रत्यंगिरा धूमावती
सावित्री गायत्री सरस्वती ब्रह्मानन्दकलेति ॥ ८॥

ऋचो अक्षरे परमे व्योमन् । यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किं ऋचा करिष्यति।
य इत्तद्विदुस्त इमे समासते। इत्युपनिषत् ॥ ९॥

ॐ वाङ्मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितम् ।
आविरावीर्म एधि । वेदस्य म आणीस्थः । श्रुतं मे मा प्रहासीः ।
अनेनाधीतेनाहोरात्रान् संदधामि । ऋतं वदिष्यामि ।
सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् ।
अवतु वक्तारम् । अवतु वक्तारम् ।
ॐ शान्तिः शान्तिः शान्तिः ॥

॥ इति बह्वृचोपनिषत् ॥